३४, १०; -चानम् ऋ १, १६१,७.

?ऋणक्[a] खि ४,६,१[b].

√ऋण्व्[c] (=√रिण्व्), †ऋण्वति [illegible] १,१४४,५[d]; १६८,६; ६,२,६[e]; कौ १, ८३[e]; जै १, ९, ३[e]; ऋण्वन्ति ऋ ९, ७, ५; कौ २, ४८३†; जै ३,३६,७†; पै १६, २५,८; ऋण्वथः ऋ १,१५१,५.

ऋण्वस्- -ण्वन् ऋ ७, २,१.

१ऋत- √ऋ द्र.

२ऋत-[f] -तौ[1] ऋ १, १८, ७, २,१२, ९;१६,२;४, ३३, ११[g],७, ११, १;८,१,१२;२,१९;२७,१७; ९, ६९,६; १०, ८६,१२; ११२,९; खि ४, ११, १; ५, १६, २; मा १७, १४†; ३४,३; का १८, १, १४†; तै १,७,१२, २†; ४,६, १,४; ¶मै १,८,२; ५; २,३,१; ४, १; १०, १; ३, ६,१; ७; ८, ९[h]; ४, १, ६; ६,८; ७,३; काठ ६, ७[?][h]; ८[2]¶; ८, २¶; १७†; १२,७¶; १७, १७, क ¶४, ६; ७[2]; २८, १; †कौ १, २४४; २, ७२०; †जै १, २६,२; ३, ५९, ११; शौ ४, २६, ६; १४, २, ४७†; †२०, १४, ९; १२६, १२; पै २, ५२, ३; ४, ३६,५; १३,७,९†;१८,११,७†.

†ऋते-कर्म[i]- -र्मम् ऋ १०,५५,७; कौ २, ११३४.

?ऋते-मूल[j]- -¶लम् मै १, १०, १७; काठ ३६,१२.

¶ऋते-यज्ञ[k]- -ज्ञम् मै १, ११, ५; काठ १४,५.

ऋत-चित्- प्रमृ., √ऋताय √ऋ द्र.

१ऋतव्यां- २ऋतव्या-, ३ऋतव्या- ऋतु- द्र.

√ऋताय, ऋतायत्-, ऋतायिन्-, ऋतायु-, ऋता-वत्- प्रमृ., √ऋति, १ऋति-, २ऋति-, *ऋति-मत्-, √ऋतीय, ऋती-षह्-, ऋती-षाह्- √ऋ द्र.

ऋतु[l]- -तवः ऋ १०, १८, ५; खि ४, ५,२८; मा १४, २९[m]; १७,३; १८, २३; २३, ४०; २६, १४; २७, १; ४५; का १५, ९,२[m]; १८, १,४; १९,७,५; २५,८,३; २९, १, १; ६,१; ¶तै १,५,१, ४;७,३; ६,११,५[3], ३,४,८,६[8]; $४, १, ७, १,३,१०,१[m]; ११, ४, ५,१,५,१; ७,३; ८,५$; ९, १,१०,३;५,२,५,२; ६,१; १२, १$, ३,१,२[3];४,२, १; २;३,४; ४,२; ६,३; ९,३; ११,४[1], १२, २; ६, ७,१,२; १०,३; ७, २,५, २५, १$; ६,१, १,८; २,३, ४; ३,३,६; ७,१; ४,५,७; ५,३,२; ३; ५,१; ६, २,१; ३,३; ११,५; ७,१,१०, १;३; २,१,१; ६,१[2]; २;३; १०,१; ३, ८,१; १०, ५; ४,२,२[1]; ३,२; ५-६,२;७,२;३; ११,३;५,१,४; २०,१$;२५,१; ¶मै १, ४, १२; ६,९[3]; ७, ३[4]; ५; ८,३[3];$; ६; १०, ५[2];१७[5]; २०; $२, ८,६[m]; १२, ५;१३, १०; ३,१,१; ५[2]; ९; ३,१; ४; ३,४; ५;८; ४, ३[3];४[5];६[2]; $; ७[2]; ६,४; ७,१; २; ९, ४[2]; ४, १,५; ३,२; ७; ४,१; ६,७[3];८[2]; ७,५; ८,४;८; ९, १८$; ¶काठ ६,७; ८, ८; ९, १[3], ३[5]; १६[2]; १०,४; ११, ५; १०; १२, ६[1]; $१७, ५[m]; १०; १८, १६ $; १९; १९,५,७; १०; ११; २०, ३; ४; ६; १०[4]; २१, ३; ५[2]; ६-८, १२[4]; २२,१$; २;६;८[2]; २३,२; ८[2]; २४,४;८; २८,२[1]; १०;२९,३; ३१,३[3];१५[2]; ३३, ३;८; ३४,७[5];९; १२;$३५, ९; २०[5]; ३६,११[5];१२; १३; ३७, ११; ३९,१०$;४०,६$; $४५, ५,१७; ५०,६; ¶क ४, ६; ७, २; ८, ४[1]; ६[5]; $२६, ४[m];९;

a) पाठे? √मृ>मृणत्->-णन् (तु. मूको. मृणक् इति) इति वा √भिद्>भिन्दत्->-न्दन् (तु. सपा. शौ. पाभे.) इति वा शोधः। यद्वा भि° इत्येव स्यात् मृणन् इति च तस्य वावि. पर्यवस्येत्। b) सपा. शौ ५,२८,१४ भिन्दुः इति, शौ १९,३३,२ मुदन् इति च पाभे.।

c) एतदीयानि यनि. रूपाण्यपि <√ऋ इति PW.प्रमृ.।

d) तु. सस्थ. टि. ऋ। e) पाभे. इते पृ १८८ i टि. द्र.।

f) विनार्थे अव्य.। व्यु.?। <√ऋ इति PW. GW. प्रमृ. (तु. आर्ति-, निर्ऋति- प्रमृ.; पृ ३९७ p टि. च)। वा. सप्त१ रूपम्। g) तु. वै. सा. GRV.; वैतु. GW. १ऋत->-ते। h) ते इति पाठे? यनि. शोधः (तु. सपा. क ४, ६ तत्-संस्कर्तुः टि. च)।

i) अस. समासान्तप् टच् प्र. (पा ५,४,१०९) चित्-स्वरश्च (तु. वै. ?PW. GRV. GG.; वैतु. सा. GW. BS. S. Gri. पूप. १ऋत- इति)।

j) पाठे? अस.। ऋते-मूल- इति शोधः (तु. सस्थ. तप-मूल-)। k) अस. अन्तोदात्तः। l) वप्रा.। नाप.। व्यु.?। <√ऋ इति (पाउ १,७२) PW.GW. प्रमृ.।

m) सपा. ऋतवः (माश ८,४,३,८ च) <>आर्तवः <>आर्तवाः (माश ८,४,३,८ च) इति पाभे.।

ऋजु[a]– -|जवः ऋ १०, ८५, २३; शौ १४, १, ३४; पै १८, ४, ३; -जवे ऋ २, २७, ९; ६, ७०, ३; खिमा २९, ४८; मा ३७, १०; का ३७, १, १०; तै ७, १, १७, १; मै ४, ९, १?[b]; १२, १†; काठ ४१, ८; -जु[c] ऋ २, ३, ७; ४, १, [१७; ६, ५१, २; ७, ६०, २]; ५, ४६, १; १०, ६७, २; मै ३, ३, १०¶; शौ २०, ९१, २†; -जु ऋ २, २६, १, ९, ९७, ४३; खि ५, २१, १; तै २, ५, ११, ७¶; ¶मै १, १०, ७, ३, ९, २[c]; ¶काठ २१, १०; २७, १; ३६, १, क ४२, १¶; -जुना ऋ १, ४१, ५; -जुम् ऋ ९, ९७, १८; तै २, ५, ११, ७¶; मै ४, १, १४[d]¶; काठ २५, ५[d]¶, क ३९, २[d]¶, पै ५, ३१, ६[e]; -¶जून् मै १, १०, ८; काठ २७, १, ३६, ३, क ४२, १, -¶जून् मै १, १०, ८, काठ ३६, ३.

ऋजीयस्– -यः ऋ ७, १०४, ११; शौ ५, १४, ११[c]; ८, ४, १०†, पै ७, १, ४[c]; १६, १०, २†.

ऋजीयसी– -सी पै १५, २३, १०.

ऋजु-केश– -शः पै ७, ८, ४.

|ऋजु-क्रतु[e]– -तुः ऋ १, ८१, ७; मै ४, १२, ४; काठ १०, १२; शौ २०, ५६, ४.

ऋजु-ग[f]– -गः शौ १, १२, १.

ऋजु-गा[g]– -गाः तै ३, १, १०, २.

ऋजु-गाथ– -०थ ऋ ५, ४४, ५.

|ऋजु-नीति[h]– -ती ऋ १, ९०, १; कौ १, २१८; जै १, २३, ५.

ऋजु-मुष्क[i]– -ष्काः ऋ ४, ६, ९; -ष्कान् ऋ ४, २, २.

ऋजु-रश्मि[j]– -श्मिः तै ४, ७, १५, २; मै ३, १६, ५; काठ २२, १५; शौ ४, २९, ७; पै ४, ३८, ७.

ऋजु-वनि[k]– -निः ऋ ५, ४१, १५.

ऋजु-ह(स्त>)स्ता[l]– -स्ता ऋ ५, ४१, १५.

√ऋजूय

|ऋजूयत्– -यताम् ऋ १, ८९, ९; मा २५, १५; का २७, ११, २; मै ४, १४, २; पै २, ३०, १; -यते ऋ १, ११६, २३; ५, ११, ५; १०, १००, ३; -यन्तम् ऋ १, १३६, ५.

ऋजूयमान– -नः ऋ १०, ८८, ९.

ऋजूया[m]– -या ऋ १, १८३, ५.

ऋजूयु– -यवः ऋ १, २०, ४.

ऋज्व(जु-अ)श्व– -श्वः ऋ ४, ६, ९.

ऋञ्जत्[n]– -ञ्जन्तः ऋ ६, ३७, २; ३[o].

ऋज्र,ज्रा[p]– -ज्रः ऋ ९, ९७, ९; १०, २०, ९; कौ २, ४६८†; ११९३; जै ३, ३४, ३†; -ज्रम् ऋ ८, २५, २२; -ज्रा ऋ १, १७८, ५; ४, ६६, ११; ८, १, १२; १०, २२, ५; -ज्राः ऋ ८, ३४, १७; -ज्रासः ऋ ७, १८, २३; -ज्रे ऋ ६, ६३, ९; -ज्रेभिः ऋ १, ११७, १४; -ज्रेषु ऋ ८, ६८, १८; -ज्रौ ऋ ८, ६८, १५.

ऋज्रा(ज्र-अ)श्व[q]– -श्व. ऋ १, १००, १७; ११७, १८; -श्वम् ऋ १, ११६, [१६ (११७, १७)]; -श्वस्य ऋ १, १००, १६; -श्वे ऋ १, ११७, [१७ (११६, १६)];

a) विप. (पन्थ-, मर्त्य-, प्रमति- प्रमृ.)। कुः प्र. (पाउ १, २७) तत्स्वरश्च।

b) ऋ° इति हरे? यनि. शोधः।

c) कचित् वा. क्रिवि. द्र.।   d) भर्णतः?।

e) विप. (इन्द्र-)। बस. उप. प्रकृतिस्वरम् उसं. (पा ६, २, ११८; वैतु. °तु- इति MW. ?)।

f) विप.। उस. प्रकृतिस्वरः। उप. √गम्+डः प्र.।

g) विप. (वाच्-)। उस. विडन्तम् उप. प्रकृतिस्वरम्।

h) बस. अन्तोदात्तः। उप. <√नी यद्र.।

i) विप.। बस. उप. प्रकृतिस्वरं उसं. (पा ६, २, ११८)।

j) विप. (रथ-)। बस. पूप. प्रकृतिस्वरम्।

k) विप. (कारु-)। उस. प्रकृतिस्वरः। उप. √वन् +इन् प्र. (पा ३, २, २७)।

l) विप. (मातृ-)। बस. उप. प्रकृतिस्वरम् उसं. (पा ६, २, ११९)।

m) स्त्री. क्यः प्र. (पा ३, ३, १०२) तत्स्वरश्च। -या इति ६ १११ ■ टि. दिशा वा. क्रिवि. (तु. वै. GW. प्रमृ.; वैतु. मा. ऋजु– +√या> °या– >-या [=द्वि१] यद्वा ऋजु–> यनि. द्र. =तृ१ इत्युभयथापि?)।

n) दिवादौ शवन्ते लसा. निपाते नित्-स्वरः।

o) तु. सस्थ. टि. अभि।

p) विप. (अश्व-प्रमृ.)। रक् प्र. (पाउ २, २८) तत्-स्वरश्च।

q) व्यप. (ऋषि-विशेष-)। बस. पूप. प्रकृतिस्वरम्।

खि १,१२,७.
ऋजत्– √ऋज् द्र.
[१]ऋजा पै १७,२३,१.
ऋजिप्य[a]– -प्यः ऋ ४, २७,४; ३८, ७; -प्यम् ऋ ४, ३८, २; ६, ६७,११; -प्याः ऋ ३,३१,१७; -प्यासः ऋ २,३४,४.
†ऋजिश्वन्[b]– -श्वना ऋ १,५३,८; १०१,१; १०, १३८,३; कौ १, १६०; जै १, १६,११; शौ २०, २१,८; -श्वनि ऋ ८,४९,[१० (५०, १०)]; खि ३, १, १०; -श्वने ऋ ४,१६,१३; ६, २०, ७; -श्वा ऋ ५, २९, ११; १०, ९९,११; -श्वानम् ऋ १,५१,५.
ऋजीति–,ती √ऋज् द्र.
ऋजोनस्[c]– -नसि खि ३,४,२‡[d].
†ऋजीपिन्[e]– ०पिन् ऋ ८, ३३, १२; जै ४, २०,५; -पी ऋ ४, २६,६.
ऋजीयस्– √ऋज् द्र.
[१]ऋजीप[f]–
[१]†ऋजीषिन्[g]– -षिणः ऋ १,८७, १; २, ३४, १; ८, ३२, १; -षिणम् ऋ १,६४,१२; ६,४२, २; ८, ७६, ५; ८६, ४; कौ २, ७९१; -०षिन् ऋ ३, ३२, १; ३६, १०; ४३, ५; ५०, ३; ६, १७,१०; २०, २; ७, २४, [३; ८,७९,४]; ९६, ९; खि ५, ७, ४, ११; -षी ऋ ३, ४६, ३; ४, १६, १; ५; ५. ४०,४[h]; ६, १७,२; १८,२; २४,१; ८,९०, ५; १०, ८९,५; तै २, २, १२, ३; काठ ८, १७; कौ १, २४८; २,७६१; जै १,२६,६; शौ २०, १२,७[b]; ७७,१; ५.
[२]ऋजीषु[i]– -षम् ऋ १, ३२, ६; पै १३,६,६.
[३]ऋजीषु[j]– -षः मै ४, ८, ५[a]; -षम् खि ५, ७,४, १६; तै ६, १, ६, ४¶; ¶काठ २३, १०; २५, ९; २९, ३[a]; ¶क ३७, १; ४०, २; ४५, ४[a]; -षा शौ ९, ६, १६; पै १६,११२, २; -षे काठ ३४, १६¶; -षेण मा १९,७२; का २१,५,१; काठ ३८,१.
[२]ऋजीषिन्[k]– -षि तै ३,२,२,१¶.
ऋजु–, ऋजु-केश– प्रभृ. √ऋज् द्र.
ऋजूनस्[c]– -नसि ऋ ८,५२,२[d].
√ऋजूय, ऋज्यत्–, ऋत्र– प्रभृ. √ऋज् द्र.
√ऋञ्ज् (वधा.)[l], ऋञ्जते[m] ऋ १, १४३,७; ५,४८,५; ‡ऋञ्जसे[n] खि ५, ४, ३[a]; ४; कौ ४, ३[a]; ४; जै २, ७, १[a]; २; †ऋञ्जसे ऋ ४, ८, १[o]; ६, १५, १[p]; ४[p]; मै २, १३, ५; काठ १२, १५; कौ १,१२; जै १,२,२; ४, ११,५; ऋञ्जत ऋ ५,८७,५. ऋञ्जते[q] ऋ १, १२२, १३; १४१,६; २, १,८;२,५.
*ऋभ्र–
ऋभ्र-सानु[r]– -नः ऋ १,५८,२; ४,२१,५; -नम् ऋ १, ५६, ३.
†ऋञ्जत्– -अन् ऋ १, ५५, ७;

a) =ऋजीपिन्– । विप. ( [ऋजुगामिन्- वें. सा.] दधिक्रा-, मरुत्-, श्येन-, मखि- प्रभृ.)। व्यु.? । पपा. नावग्रहः। सा.<ऋजु- + √आप् इति, PW. GW. MWA. प्रमृ. <√ऋज् इति [Zd. ərəzifya = श्येन-]। √ऋज् (वधा.)>*ऋजस्–[भाव.]>(अकुलवचनेऽर्थे) *ऋजस्य– >नैप्र. यनि. इति मतम्।

b) व्यप. (नृप-विशेष-)। व्यु.? । पपा. नावग्रहः। ऋजु– + √अश् [व्याप्तौ] इति सा.। c) व्यप. (ऋषि-विशेष-)। व्यु.?। d) सपा. ऋजीनसि<>ऋजूनसि इति पाभे.।

e) =ऋजिप्य–। विप. (इन्द्र-, श्येन-)। व्यु.? *ऋज-स्विन्–> नैप्र. यनि. (शिष्टं a टि. दिशा द्र.)।

f) भाप. ( शक्ति-, राभस्यादि-गुण-विशेष- वा)। अर्थः व्यु. च ?।

g) विप. (इन्द्र-, मरुत्-)। मत्वर्थीयः इनिः प्र. तत्-स्वरश्च (तु. PW. प्रभृ. =प्रेरयितृ- इति; वैतु. सा. पक्षे <√ऋज् इति)। h) सपा. ऋजीपी (गोधा २, ४,२ च)<>ऋघाता इति पाभे.।

i) विप. (इन्द्र-)। व्यु.? =२ऋजीषिन्- <३ऋजीष- इति स्क. L [५४३] MVG [२१५]; =१ऋजीषिन् इति PW. प्रभृ, <√ऋज् इति सा., [पक्षे] स्क.[या ६,४] च।

j) पुं. न. च नाप. (सोम-फल्गु-)। व्यु.?<√ऋज् =√रिच् इति विमृश्यम्।

k) विप. (तृतीय-सवन-)। इनिः प्र. तत्स्वरश्च।

l) =√ऋज् [यद्र.]। धा. गतौ, प्रसाधने प्रभृ. वृत्तिः द्र.। m) तुदा. लटि. मपु१ रूपम् द्र.।

n) पाभे. ऋन्जे पृ ८७१ i टि. द्र.।

o) लटि उपु१ (तु. स्क. या [६,२१] सा. GW. प्रभृ.; वैतु. वें. दु. मपु१ इति?)। लङ्थि सिप् उसं. (पा ३,१,३४)।

p) लटि उपु१ (तु. GW. प्रभृ.; वैतु. सा. Barth. [EF २,२८१] मपु१ इति)।

q) रुधा. मपु३ रूपम् द्र.।

r) ऋभ्र-सानु– इत्यनेन सन्न्यायता द्र.।

४; काठ ८,८; ९, १६; ११, ५; १२,६; १८, १३; १९, ५; २०, १०; २१, १२; २२, ३;६; २३, २;८; २४, ४; २८, २; २९, ३; ३३, ३; ८; क ७, २; २९, ७; ३०,३; ३१,१२, ३४, १; ३५, ८: ३७, ५; ४४, २; ४५, ४; पै ९,२१,६§,-तू मा १०, १४[a], १३, २५[२]; १४,६[२]; १५[२];१६[२]; २७[२]; १५,५७[२], का ११,५,५[a]; १४, २, ११[२]; १५, १, ५[a]; ४, ३[४]; ८,५[२]; १६,७,१[२]; तै ४,४, ११,१[२];२; ६,५,३,१¶; ७,४, ८,१[२]¶; मै २,७,२०[a];८,१२[c]; ¶३,६,९;७,१०; ¶४, ९;६,४, ७[४], काठ १७,१०[c]; २८, २¶; ३५, ९[६]; ३७, १६; ३९, ७[a]; क २६,९[c]; ४४,२¶; ४८,१०[६]; -तून् ऋ १,१५,५; ४९,३;९५, ३;२,३८,४; १०,२,१; ३; ११, १; ८५, १८, खि ३, २२, १०; मा ९, ३२; का १०, ६, २[१D]; ¶तै १,१, १४,४†; ६, ११,५; ७, ११,१§; २,६, ९, १, ४,३, ११, ३§; १३, ४†; ५,१,५,२; ३, १, ३[२]; १०, १; ४, ११,४; ७,२, ५; १७, १§; ६,२, ३,४; ५, ३, २[२]; ५,१; ६,१,५, २,१; ११,५; ७,१,३,२; १०,१[२]; २, १,२; ६,२, ३, २,१; ४, ३,२; ७, २; ¶मै १, ८, २; ११,१०; २, २, २; १३, १०[२]§; ३, २, ९[१]; ४, १,५; ४, ९; †१०, १;

२; १२, २†; ¶काठ २,६[c]; १५[२]†; १४, ४§; १८, २१†; २०, १०[२]; २२, १; ६; २४, १०; २८, २; ३१, ३; १५; ३३, ८; ३४, ९[२]; १०; ३६, ११; ३९,१०§; ४०, ९§; ५३, ७§; ¶क ३१, १२[२]; ३४, १; ३८,३; ४४,२; ४७,३; कौ †१, २२९; ३६७; २, १०५९; †जै १, २४,५; ३८, ८; शौ ३, १०, ९; ६,२६,९; ६१,२;३; ७,८६, १†,८,९,१०; ११,८,१७; १४, १, २३; १८,१,१८†; १९,५९, ३†; पै १,१०६,२; ८,१४,३†; ९,२१,६; १५,१४,३; १६ १८, १०,१५१,७;१७,२८,४,१८,३, २†, १९, ४,२;१४,९;४७,६†; -तूनाम् ऋ ५, १२,३; मा २४, ३८, का २६,८,३; तै १, ६, १, २;२,३[६]; ११,५, २,६, १,१¶; ४,३,३,१[१a]; २[१a]; ११, ५, ५, ¶३,१, १, ११,३[२];४, २,१¶; ५,१८,१, ७,२,४; १८,१; ¶६, ५, ३, २; ५,१, ७, २, ६, १¶; मै ¶१,४, १२, ६,९; ८,२; २, १३, १०; ३, १४, १९; ४, ६, ७¶; काठ ४,१४[६],८,१¶; १९, ६¶; ¶२०,६; १०, २१, ३¶; २८,२¶; ३१,१५; ३४, १३¶; ३९,१०; ४१,१[५a], ४७,८; ५३, ८; ¶क ६, ६; ३०, ४; ३१, ८, १२; १८; ४४, २; शौ १५, ६,१८; १६, ८, २०; पै ९,२१,

६[५]; १४, ३, २५; १५, ७, ७; -०तो पै ११, २, ९[f०]; -तोः ऋ २, २८, ५; ¶मै १, ६, ९[२]; ७,४; ४,१४,९†; काठ ९, ३¶; क ८, ६¶; -तौ ¶मै १, ६,९; २,१, ४; ४, ६, ७[२]; ¶काठ ८, १[४]; १०, २; ¶क ६,६[४]; शौ ११, ६,४; पै २, ७७,१; १६, २१,३. आर्तव[f]- -वः तै ४, ३, १०,१[g]; -वाः मा १४, २९[g]; का १५, ९,२[g]; ¶तै ७, २,६, २; ३; मै २, ८,६[g]; काठ १७, ५[g]; क २६, ४[g]; शौ ५, २८, २; १०, ६, १८; ७, ५; ११,३, १७; ९, २०; १५,६, १७; १७,६; पै ९, २३, १२; १३, १२, ११; १६, ४४,२; ५३,१८; ८३,१०; १७, ७, ७; २९, १५; -वान् शौ ३, १०, ९; ११, ८, १७; पै १५, १४, २, १७, २८, ४; -वानाम् तै ७, २, ६, १¶; शौ १५, ६, १८, १६, ८, २१; -वैभिः खि ३, १६, ६; -वेभ्यः मा २२, २८; का २४,१४,१; मै ३,१२, ७; शौ ३, १०, १०; १९, ३७, ४, पै १, १०५, ४; १६,९५,४; १७, २२, २; -वेषु तै ७, २,६, २¶; -वै. शौ ५,२८,१३; पै १, ५४, ५.

आर्तव-त्व[h]- -त्वम् तै ७, २, ६,१¶.

१¶ऋत(व्य>)व्य[h]- -व्याः तै ५, ३,१,१,२;११,३[२]; ४,२,१[२].

---

a) पाभे. कृते पृ १०१० b टि. द्र. ।

b) सकृत् अनून् <> दिशः <> परिक्रम इति पाभे. ।

c) = सपा. हिश्रौ ७, २, ४७ । आपश्रौ १०, २५, १ तु ऋ (! ऋ [तु. C.]) तून् इति पाभे. ।

d) पाभे. कृते पृ १०१० c टि. द्र. ।

e) पाठे? ऋतात्-ऋतौ [वीप्सायां सप्त१] इति शोधः द्र. ।

f) नाप. । तद्धितः अण् प्र. । प्र. स्वरः ।

g) पाभे. कृते पृ १००९ m टि. द्र. ।

h) नाप. (इष्टका-विशेष-) । मन्त्रोपधेयार्थे यति प्र. (पा ४, ४,१२५) तित्स्वरः ।

२¶ऋतु(व्य>)व्या[a]– -व्या. मै ३, २, ९[२]; ३, ३; –व्याभि. मै ३, ३,३.

३¶ऋत(व्य>)व्या[b]– -व्याः काठ २०,१०[१];२१,३; क ३१, १२[१]; १८; –व्यानाम् काठ २१, ३; क ३१,१८; –व्ये काठ २०, ६; क ३१,८.

¶ऋतव्या-स्व– -स्वम् काठ २१, ३; क ३१,१८.

¶ऋतु-मह[c]– -हाः तै ४,७,७,१S; ६,५,१-४,१; मै ४,६, ७[१]; काठ २८, २[१]; क ४४, २[१]; –हान् तै ६,५,१०, १; –है तै ६, ५,२, १; मै ४,६,७,८; काठ २८, २, क ४४,२.

ऋतु-था[d] ऋ १,१६२,१९; १६४, ४४,१७०,५; २, ३,७; ४३, १; ५, ३२, १२, ६,९, २, १६, ३; ६२,९, ८,१२, १९; ४४,८; ९, ५७,१२; १०,१८, ५, ४०, ४, ८५, १६; ९८, ४,११०, १०; १३१, ३, खि ५, ७, १, ११; मा २०, ६५; २३, ४०[e]; २५, ४१; २६, १९[f], २९, ३५†, का २२, ६. ११; २५,८, २[g]; २८, ११, १[f]; ३१, ४, ११†; तै ४, ६,९,३†; मै १,६,२[g]; ३, ११, ३; ४,१२,२[h]; १३,२;३†; काठ १०,१२[g]; १५, १३; १६,२०†; ४६,५†,५०,६; कौ २,३७१†; ११९३; जै ३,३०, १४†; †शौ ५,१२,१०,९,१५,२६; १३, ३, २S; १४,१,१६; २०,१२५,६; पै १८,२,५†.

ऋतु-था[i] तै २,१, ११, २[b]; ५,२, १२, १[g]; पै १५, ५, ४[j]; १६, १८,७;१९,८[k].

¶ऋतु-नामन्– -मानि काठ २२, ६, क ३४,१.

ऋतु-पति[l]– -तीन् शौ ३, १०, ९; ११, ८, १७; पै १५, १४, ३; –†०ने ऋ १०,२, १; तै ४,१, ११,४; मै ४, १०, १; काठ २, १५,१८,२१.

ऋतु-पा[m]– -पाः ऋ ३,२०,४[n]; ५, १२,३[n];१०,९९,१०;–०पाः ऋ ३,४७,३;–पाभिः ऋ४,३४,७.

¶ऋतु-पात्र[o]– -त्रम् तै ६,५, ३,१; मै ४, ६,७;८;८,८[२]; –त्रे मै ४, ५,९; ६, ७, ८, ७S; काठ २८, २; १०[१]; क ४४, २; ४५, १[१]; –त्रेण तै ६,५, ४, १;५, १[२]; मै ४,६,८; काठ२८,२; क ४४,२.

ऋतु-मत्– -मत् ¶मै ३,७,४;४,६, ८; –मतः मा १९, ६१; का २१, ४,११; मै ४,१०,६; काठ २१, १४, –मताम् काठ ३३, ७¶[p]; –मद्भ्यः काठ ३३, ७[२]¶[p]; –मन्ति मै ४,६,८¶.

ऋतु-मुख[q]– -खे मै १,६,५¶; काठ ८,१¶; क ६,६¶; पै ४,४०,५.

¶ऋतु-याजिन्– -जी मै १, १०, ८[१]; काठ ३६,३[१].

ऋतु-शस्[r](ः) ऋ १, १६२, ४; १०,२,५;५५,३;९८, ११; मा १३,४३; २३,५७,५८;२५,२७; २९, १०; का १४, ४, ६; २५, १०,५,६; २७,१२,४; ३१, १, १०; तै ४,२,१०,२; ६, ८,२†; ५,१,११,४¶; मै २,७,१७; ३, १०,७¶;१६,१†; ९; काठ १६, १७,४६,९; ४†, शौ ९,५, ११; पै १६,९८,२.

ऋतु-(स्थ>)स्था[s]– -स्थाः[t] मा १७,

[a]) यप् प्र. उसं. इति विशेषः । शेषं पृ १०११ h टि. द्र.।
[b]) स्वराऽभावात् पृथङ्-निर्देशः ।
[c]) नाप (सोमग्रह-विशेष-)। कस. अन्तोदात्तः ।
[d]) वीप्सायां था प्र उभे. (पा ५, ४,४२) तत्स्वरश्च ।
[e]) सस्था. ऋतुथा <> ऋतुथा इति पाभे. ।
[f]) सस्था. तैआ ३, ७, १०,३ काश्री ९,१४,१ ऋतुथा [वैप२ च द्र.] इति पाभे. ।
[g]) सस्था. काठ ७, १४; ८, ३; १८,४; ३४, १९ तैआ ३,११,५,१ विनिद्दः पाभे. ।
[h]) सस्था. °था (काश्री २, ११,१२ शांश्री ३, ६, २ च) <> °था (मानश्री २,४,४ च) <> हिए १,७, ११ इह ते इति पाभे. ।
[i]) = ऋतु-था । था प्र. इतिमात्रं विशेषः ।
[j]) पृ ६५० o टि. द्र. ।
[k]) °व्याः इति पाठे? यनि. शोधः ।
[l]) नाप. । उस. प्रकृतिस्वरः । उप. यद्र. ।
[m]) विप. (अग्नि-, इन्द्र-) । उस. विजन्तम् । उप. √पा (पाने) द्र. ।
[n]) ऋतु° > ऋत° इति शोध-प्रस्तावः (तु. ORN.) ।
[o]) नाप. (ऋतु-ग्रह-) । मध्यमपदलोपिनि कस. अन्तोदात्तः ।
[p]) विश्व-देव-साहचर्यात् ऋभु° इति शोध-प्रस्तावः (द्र. तै ७,५,७,३ काठ १७,४,२१,१) ।
[q]) षस. अन्तोदात्तः ।
[r]) वीप्सायां शस् प्र. (पा ५,४,४३) तत्स्वरश्च ।
[s]) विप. (इष्टका-) । उस. विजन्तम् । उप. षत्वविकल्पः (पा ८, ३,१०६) । [t]) पाभे. इते पृ ६६६ o टि. द्र. ।

३; का १८,१,४; मै २,८,१४;३, ३,४[२]; ¶; काठ १७, १०; क २६,९.

¶ऋतु-स्था[a]- -स्थाः तै ५,७,६,६[१]; -स्थाम् तै ५,७,६,५.

¶ऋतुस्था-यज्ञायज्ञिय[b]- -येन तै ५, ५,८,१.

ऋतु-स्पृश्[c]- -स्पृशः[d] काठ १७, १०; क २६,९.

ऋत्वि(तु-इ)ज्[e]- -त्विक्, ऋ २, ५,७; पै २०, ३४,४; -त्विक्षु ¶तै ७, २, १०; १; -त्विग्भिः काठ ३५, १०; क ४८, १२; -¶त्विग्भ्यः तै ६,१,४,२; मै ३, ६,८;४,८,३; काठ २३,४;२६, ७;२८,५; क ३६,१;४१,५;४४, ५; पै १,१०५,४§; -त्विजः ऋ १,६०,३;८,५८,१;९,११४, ३; १०, २, १; खि ३,१८, २; तै १, ६, ५, १; ७, ३,१¶; ५, ३; २,३,११,४[१]¶; ४,३,११,४†; ५,७,७, ३; ¶६,१, ४,२; २,२, ५, ११,४; ३,६,१; ७,५; ७,३, ११, १; मै १,४, २; ७, ६,२[f]; १०,९¶; २,३,५; ¶३,८,२;४; ९, ६; ८[२]; ४,६, ४¶; १०,१†; ¶काठ २, १५†; ५, ५§; ११, ८[२]; १८, २१†; २५,९; २६,७; ९[२];२७,९; २८,५; ३२,५; ३५, ५[२]§; ३६,४; ४०, १३§; ४३, १§; ¶क ४०, २; ४१,५; ७[२]; ४४, ५; ४८, ६[२]§; शौ ८, ९, २१; ९, ७, ६; १०, ९,४; १२, १,३८; १९, ११,५‡[g]; ४२,२; ५८,६; पै ९, ५७, ३‡[g];१३,८, १५‡[g],१६,११,९;१६,४;११६, १;११६,४;१७,४,९; -०त्विजः शौ ६, २, १; पै १९,१,४; २०, १५; -†त्विजम् ऋ १. १, [१; ५,२६,७]; ४४,११; ४५,७; २, ५, ७; ३.१०, [९; १०, ११, ७ (११८,७)]; ५, २२,२; ७,१६, ६;८, ४४, ६; १०,७,५; तै ४, ३, १३, ३; मै ४,१०, ५; ११, १, काठ २,१४[१]; की २,८९३; ३.३,४; जै २,१.१०,४,१३,८; २९,६; -†त्विजा[h] ऋ ८. ३८, १; की २, ४२३; जै ३, ३२, १३; -०त्विजा ऋ १०, ७०, ७; -त्विजाम् ऋ १०, ११४, ९; ¶ तै ३,१, १०,२; २,९,५; ७, १, ५, ६; ३, २,१; ¶मै ४, ६, ३;७,४; ¶काठ २८,९; ३४, १८; क ४४, ९¶; -‡त्विजौ[h] काठ ३५,५; क ४८,६.

¶आर्त्विजीन[i]- -नः मै ३, ८, ४; काठ १३,४.

आर्त्विज्य[j]- -ज्या ऋ १,९४, ६; पै १२, १,५; -¶ज्याय काठ २८,३; क ४४, ३; -ज्ये मै ४, २,१¶; -ज्येन शौ ११,३,१४; पै १६,५४,८.

१ऋत्विय[k]- -यात् तै २, ५. १, ५[२]¶; -याय शौ १२, ३, २९[२]; पै १७, ३८, ८[१]; -ये शौ १४, २,३७; पै १८,१०,७.

ऋत्विय-व(त्>)ती- -ती मै २,७,१९; पै १२,६,१; १९, ४२, ८; -तीम् पै ६,१०,४.

२ऋत्विय[m]- -†यः ऋ १.१२५, ३; १४३,१; ३, २९,१०; ४१, २; ५,७५,९; ८, १९, ३१; ९, ७२,४; मा ३,१४; ११, ४८§; १२,५२; १५,५६; का ३,३,४; १२,४,१२§; १३, ४. ८; १६,

---

[a]) विप. (अग्नि-) । व्यु. इतो पृ १०१२ *o* टि. द्र. ।

[b]) नाप. (साम-विशेष-)। पपा. नावग्रहः । मध्यमपद-लोपिनि कस. उभ. प्रकृतिस्वरः उसं. (पा ६, २,१४०)। =सपा. आपश्री १७,१२,१० । आश्रौ २,१९,९ वैश्रौ २, ८,१-२ तु °ष्ठा···यज्ञी° इति पाभे. ।

[c]) विप. (इष्टका-) । उस. ।

[d]) पाभे. इतो पृ १००१ *a* टि. द्र. ।

[e]) विप.च नाप. च । उस. क्विबन्तम् उप. प्रकृतिस्वरम् (तु. या [३, १९] ORN. प्रमृ.; वैतु. या. [पक्षे] < √ऋ इति पा<ऋतु-+ √यज् [शाकपूणिमते] इति वा)। [f]) सपा. ऋत्विजः<>द्रोग्धाः (मास ९,३,३,४४ च) इति पाभे. ।

[g]) सपा. ऋत्विजः<> यज्ञियाः इति पाभे. ।

[h]) सपा. °जा<>°जौ इति पाभे. ।

[i]) अर्हत्यर्थे खञ् > ईनः प्र. (पा ५, १, ७१) नित्स्वरस्च ।

[j]) कर्मणि ष्यञ् प्र. (पा ५, १,१२४) ञित्स्वरस्च ।

[k]) नाप. (ऋतौ [=रजसि] प्राप्तं कर्म [=मैथुनम्])। घन् > इयः प्र. उसं. (पा ५,१, १०६; ६,४, १७५) नित्स्वरस्च ।

[l]) 'यथा योषा ऋत्वियाय (पत्या) गंभवति तथा' इति वा. द्र. (तु. पै. [मूको.] ऋत्वि (य>) या-वन्- >-वा [प्र१] इति; वैतु. RW. W. ऋत्विया या इति द्विपदः शोधः इति च ?)।

[m]) विप. (भाग-, योनि-, होतृ-) । तदस्यप्राप्तमित्यर्थे घन् > इयः प्र. (पा ५,१,१०६) तत्स्वरस्च ।

६, ८; तै १,५,५,२; ७,२; ३, ४,१०,४; ४, १,४,४§, २,४, ३; ७,१२,५; ५, १, ५, १०§; मै १,५,१; ५²; ६; ६,१; २,७, ५§; काठ २,४; ६,१; ७,४,५; १६, ४§; ११; १८. १८; २२. ६; क १, १६; ४, ८; ५, ३;४; २५,२; २९,६; ३६, ३; कौ १, ४३८§; २, ११११८§; ११७३; जै १,४६,२§; शौ ३, २०, १; २०,२३,२; पै ३, ३४,१; -यम् ऋ २,१[२; १०,९१,१०]; ८, ४०,११;१०,९१,४,६;१००,२; १७९,१; मा २३,६३; का २५, १०, ११; कौ २, ११७४†, शौ ७,७५,१†; पै ५,३७, २, १३, २, ९; -याः ऋ १, ११०, २, -यम् पै १०, ४, ४, -यानाम् पै ११, १, १२, -याय ऋ ८, ६३,११.

२ऋत्विय[a]-
ऋत्वि(य>)या-वत्- -वन ऋ ८,८,१२.
ऋत्वियावती- -ती ऋ ८, १२,[१०; ८०,७].

१ऋत्व्य[b]- -त्व्ये![c] ऋ १०,१८३,२.

?ऋतुकन्तुनी ऋ त्वि दा प्र मा भ्या सि नी पै ३, ३७,१.

ऋतु-ग्रह- प्रमृ. ऋतु- द्र.

? ऋतुनः पै १९,३०,१०.

ऋतोथ-, ऋत्य-, ऋत्वा √ऋ द्र.

ऋत्विज्-, १ऋत्विय-, २ऋत्विय- ऋतु- द्र.

२ऋत्व्य[d]- -त्व्यानि पै १९, २५, १४.

√ऋद् (=√मर्द् [प्र.]), †ऋदन्तु ऋ ७,१०४,२४, शौ ८,४, २४; पै १६,११,४.

†ऋदू-दर[e]- -रः ऋ २, ३३, ५, -राः ऋ ३, ५४, १०; -रेण ऋ ८, ४८,१०, तै २, २,१२,३; मै ४, ११,२; काठ ९, १९.

†ऋदू-प[f]- -पे ऋ ८,७७,११; जै ४, ११,५.

†ऋदू-वृध्[g]- -वृधा ऋ ८, ७७, ११; जै ४,११,५.

ऋद्ध-, ऋद्धि-, ऋद्‌ध्वा √ऋध् द्र.

√ऋध्,न्ध्(वधा.)[h],>अर्धि, ईर्त्स्, ऋधाथे ऋ १, १७,९; ऋधत् ऋ ६, २,४[i]; मै ४, १३,९[i]; आर्ध्नो तै २, ६,९,५¶; मै ४, १३,९; ऋध्यात् मै४,१३,९; †ऋध्याम्[k] ऋ ५, ६०, १; शौ ७, ५२, ३; पै २०,३०,२; †ऋध्याम,>मा ऋ १, ३१, ८[l]; २, २८, ५; ४, १०,१; १०,१०६,११; मा १५, ४४; १७, ७७; का १६,५,२६; १८,६,१३; तै ४, ४, ४, ७; मै

---

[a]) २ऋत्विय- इत्यनेन समानं भाप ।

[b]) नाप. (काम-)। यनि प्र. वना स्वर. मप् च [पा ६,४,१७५ (तु वे मा Gr. GRV, वैतु GW विप [तनू-] इति)]।

[c]) पाठे? ऋत्व्येन इति शोध (तु छन्द°, वा. तुष° इति पुरा हेलर्पे तु. भाकांक्षा च)।

[d]) विप ([हिमक-] रक्षाम्-)। व्यु ?।

[e]) विप. (देव-, रुद्र-, सोम-)। व्यु. सर्वस्व ?। पपा. नावग्रहः। या [६,४] वें. सा. आ. PW. GW. प्रमृ. प्रभृ. <ऋदु- इति, GW. GG =आर्द्र- इति मत्वा <√ऋद् इति; उप. या. वें. GG. MW. प्रमृ. उदर- इति कृत्वा बस. इति, KW. GW. GRV. दुर- [आप.] <√दृ [भारे] इति मत्वा बस. (=दयार्द्रभाव-) इति च।

[f]) व्यु. सर्वथा ?। °दु-पु° इति पपा. इति कृत्वा सुसंस्कृता (=°तौ) इति पदसन्निधानाच्च या [६, ३३] विप. (बाहु-) इति मत्वा यनि. प्राति. पूप. =[भाप.] अर्दन- (<√अर्द् [हिंसायाम्]) इति वा, =गमन- इति वा [=शब्द- इति वा, =दर- इति वेति काचित्को पाठौ], =अर्दन- इति GRV. GG., उप. प्र- <√पा [पाने]) इतीव मत्वा =पातिन्- इति। PW. प्रमृ. ऋद्(<मृ)दु-प्र-(<√पा [पाने]) >-पौ इतीव?, ?GW. °प्र-[औ]> -पे इति मत्वा नाप. (मधुम-क्षिका- वा तादृश-जीवान्तर-विशेष- वा) इति। नाप. (मधु-पटल-) इति कृत्वा यनि. प्राति. नेप्र. <= °ऋदु-प्र- (=मधु-प्र-[=ऋदुना मधुना पूर्यन इति कर्मणि प्र.]) इति, यनि. रूपं च न. प्र२ ([=नुरुंस्तने] शोधिते मधुपटले इव ऋदू-वृधौ [=मधुवृधौ] इन्द्रस्य बाहू इत्यन्वयः) इति मतम्।

[g]) विप (बाहु-)। °दु-वृ° इति पपा.। या [६, ३३] पूप. (∫ टि. दिशा द्र.. =मर्दन् चेत्यधिकमत्र) उप. च <√वृध् =√व्यध् इतीव कृत्वा =वेधिन्- इति। यनि. प्राति. =मधु-वर्धिन्- (तु. सस्थ. रुपथ- इति, PW.GW. प्रमृ. च) इति विप. कृत्वा उस. क्विबन्तमिति मतम् (तु. ∫ टि.)।　[h]) तु. √वृध् : √रध् : √अर्ध्।

[i]) सपा. को १,३६५ विशिष्टः पाभे.।

[j]) =सपा. तैब्रा ३,५,१०,४ शाश्रौ १, १४,१६। माश १,९,१,१२ काश्रौ १,९,५ तु ऋधेद् इति पाभे.।

[k]) =सपा. तैब्रा २,७,१०,४। मै ४,१४,११ तु अद्याम् इति पाभे.।

[l]) सपा. ऋध्याम<>साकम इति पाभे.।

१,१०,३; २,१३,८; ४,१४, ९; कौ १,४३४; २,११२७; जै १,४२,८.
ऋध्यातै तै ६,५,६,२¶;
¶ऋध्नोति तै १,५,१,४; ३, ४,६,१; ५,१,४; ५,२,१०,५; ४,१०,५[२]; ५,२,१; ६,६,१०, १,७,२,१०,१;५,२,२[२], मै १, ४,१५; ७,२; ५; ८,७; १०,५; २,५,१; ३,१,१;५;१०; २,६; ३,२; ४,२; ५[२]; ६;८; ७,१०; ४,१,२; ४,७; काठ २०,९; २१,५; ऋध्नोति श १,१८,८; ¶तै १,५,४,४; ७,३,२; ५,४, ११,३; १२,३; ५,१,५; ६; ७, १,३; ४,३; ६,६,६,१; ७,१,८, २; ¶मै १,६,७; ७,२,४,५, ८,४;२,५,११; ३,१,१,४,२, १; ८; ६,१[४]; ८,४,४,३,१; ८; ४,१०[१]; ७,७; ९[१], ८,३,१०; ¶काठ ६,५;६; ७,५[२]; ८,१; ५; १३[२]; १५; ९,१;३; ११,४; ५; १३,१; ३[२]; १९,११,२०,१; २१,१,३[२],४[२]; ११; २२,२[१], ४,७;८; २३,६;२४,८, २५,३[१], २८,४[१]; २९,१,३; ६; ७,८[४]; ३०,१;९; ३१,६, ३४,९[१];१०; १३; ¶क ४,४;५, ५,४[१], ६,६; ७,१; ८,१[२];३; ४; ६; ३१,१; ३; ११; १८[२], १९[२]; २०; ३५, १;२; ३८,१; ६[२],४४,४[२]; ४५, २; ४; ७; ८; ४६,४; ४७,६;
¶ऋध्नुवन्ति तै ७,३,५,२; ५, १,२; ¶ऋध्नुवन्ति तै ३,५,१०, २; ७,३,४,१; ५,२; ४,५,२; काठ ६,४[२]; ३०,५[२];३३,१[२]; ८[२]; ३४,९[a]; १३[१]; १७; ३७,१७; क ४,३[२]; ?आर्ध्नुवन्[b] मै ३,४, ८¶; ¶ऋध्नुवत् तै १,५,१,२; ५,५,२,१; मै ४,५,९; काठ २२,७; क ३५,१; ¶ऋध्नवानि काठ ८,१; क ६,६; ¶आर्ध्नोत् तै ६,६,१,१; १०,१; ७,१,८, २; २,१०,३, मै १,७,९; ४,१, ३; ¶आर्ध्नोत् तै १,५,१,३;५, २,१०,५; ४,१०,५[२]; ६,६,६, १; १०,१; ७,३,१०,१; मै १, ६,७, ८,७: २,५,११;४,५,९; ७,७, काठ ६,६[२]; ८,१५; २०, ५,९,२१,४; ३०,१[१]; ३१,१; ३४,९; १३[a], क ४,५[२],८,३; ३१,७,११;१९,४६,४[१]; ४७, १, शौ ४,३९,१; ३,५; ७[b];
¶आर्ध्नुवन् तै १,५,४,४,७, ३,५,१, मै ३,१,१०; ३,९; ¶आर्ध्नुवन् तै १,५,४,४,५,२, १,६; ५,१,५, २,१, ७,३,४,१; ४,५,२,५,२,२, मै १,७,५[१]; ३,२,८;४,६; ८,४,४,७; काठ ८,११; ९,२[२]; २४,८; २६,६; २९,७, ३३,१; ३४,१; १३[a]; १७, ३७,१७, क ८,१,६; ३८, १; ४१,४; ४५,८; ¶ऋध्नुयात् मै ३,१,१;५;७,१०; ¶ऋध्नुयाम् म १,८,४; ३,६,१[४]; ४,७,९[१]; काठ ९,१[c]; २२,२; २९,८[१]; ¶ऋध्नुयुः काठ ६,४; क ४,३; ¶ऋध्नुयाम् तै ५,४,११,३; ५, १,५[२]; मै २,५,११; ३,८,४; काठ २१,४; ३४,११; क ८, ४[c]; ३१,१९; ऋध्नुयाम तै ७, ३,४,१¶.
ऋधथै काठ २३,५¶; ऋधेम शौ १९,५५,४; पै १९,४४,२१.
¶ऋगृधत् ऋ १,८४,१६; तै [redacted] २,११,३; मै ३,१६,४; काठ ४५,२१; कौ १,३४१; जै १, ३५,१०; शौ १८,१,६.
¶आनर्ध मै ३,३,२; काठ २१, ४; क ३१,१९; आनृधुः शौ २,३५,१[d]; पै १,८८,३.
ऋध्यासम् तै ३,२,६,१; मै ४,९,१[e,g]; ऋध्यासम् मा ८,९[f]; का ८,६,१[f]; मै १,१,१०[g]; ४,१,२; ८,९[g]; काठ १,२;४, ९[g]; ११[g]; १४; २८,४[g]; ३१, १;३५,३; क १,२; ३,७[g];९[g]; ८,१; ४४,४[g]; ४७,१; ४८,४, ऋध्यास्म मै ४,१२,९, शौ ६, ९४,३.
¶ऋध्युवे तै १,५,२,२; काठ ३१,१५;३४,१७[b]; ऋध्यन्ते काठ ३४,१७¶, आर्ध्यत, आर्ध्यंत तै ३,४,६,१¶; ¶ऋध्येत तै ६, ६,१०,२[२]; मै २,२,९; काठ ९,१७.

a) पाठे? ऋध्नुवन् (प्रपु१) इति संभाव्येत (तु. सपा. तै ५,५,२,१)। b) सपा. तै ७,५,२३,१ त्रिशिष्टः पामे.।
c) सपा. ऋध्नुयात् <> ऋध्नुयाम् इति पामे.।
d) पामे. इन्ते [redacted] १००२ / टि. इ. । घा. स्तुतौ वृत्तिः।
e) एकतरत्र सपा. तैआ ४,३,३; ५,३,९ आपश्रौ १,६, ३; १५,४,१२;५,४; ६,११; ७,२ सध्यासम् (तैनि. एत्र) इति पामे.।
f) सपा. ऋध्यासम् (माश ४,४,२,१२ च) <> गृह्णामि <> राध्यासम् इति च पामे.।
g) सपा. ऋध्यासम् (माश्रौ २,४,५,१४ च) <> राध्यासम् (आपश्रौ १३,६,१२ च) <> विदेय <> विदेयम् (माश ४,३,४,१९ च) इति पामे.।

¶अर्धयति मै १,७,२; काठ ८,१५; क ८,३; अर्धयन्ति शौ ७,८५,४, अर्धयेत् ते ६,६,१०,२[२]¶.

¶ईर्त्सेन् ते ३,४,६,१; मै १,६,५,१;१०;७,३; ¶ईर्त्सेत् मै १,६,८; काठ १३,३;२९,७; क ४५,८.

अर्धयत्– -यन् जै ४,१०,४[a].

ऋद्ध– -द्धः ते ४,४,८,१; ६,५,६,२¶; -द्धम् मा १८,११; का १९,३,२; ते ४,७,२,२; ७,५,२,२¶; मै १,७,२[1]¶; २,११,३; काठ १८,८; ३३,१¶; ३४,१३[4]¶; क २८,८; -द्धा का २,५,८[b], ¶मै १,७,५; ३,१,१०; ४,१,१३; ३,१; ¶काठ ८,१५[1]; ९,३; ¶क ८,३[1],६.

ऋद्धि– -द्धयः खि ४, ६, २; -द्धिः मा ८,५२; १८,११; का १९,३,२; ते ¶१,५,२,२; ४,७,२,२; ¶६,६,१०,२, मै २,११,३, काठ १८,८, ३७, ३¶, क २८,८, -¶द्धिम् ते १,५,१,३,४,४, ३,५,१,४; ५,२, १०,५; ६,६, ६,१,७,१,८,२, ४,५,४; ५,४,२;८,१; मै १,७,२;३; काठ ६,४;६;८,१५; ९,१;२१,१; ३०,१; क ४, ३; ५, ८,३; ४; ३१,११; ४६, ४; -द्धीः मै ३, २,८¶; -द्धीनाम् मै २, २, ६¶; -द्ध्या ते ७, ५, ८, १¶; मै ४,८,१¶; काठ ४४, १[c]; पै ७,३,११; -द्ध्याः ¶ते ५, १, १,२;३; -¶द्ध्यै ते ५,४,१०,५[1];७,४,५, ४; ६,१,५,४,२;१३,१$; मै १,४,१५; ७,२, २,१,३[1]; ३,१;६; ५,५. ३,२, ६; ३,६[2]; ४,५,७,२; ४,१,२; ३,१; काठ ८,१; १३; १०, ९[1]; ११, २; १२,१[4]; १३,२;१०; २०,५,६; २१,६;२६,७;२९,७, ३१,१[2]; ३७,३; ४५, ९[1]$; क ६, ६; ८, १; ३१,७,४१,५;४५,८; ४७,१[2].

ऋद्धि-का(म>)मा[d]– -मा मै ४,१,२¶.

ऋद्धि-परिमित[e]– -तम् ते २,३,३,१¶.

¶ऋद्ध्वा ते ७,३,५,३;७,४; ६,३,४,२,५;४,३

ऋधत्–

ऋधद्-रि[f]– -रयः ऋ ८,४६,२३.

ऋधद्-वार[g]– -राय ऋ ६,३,२.

†ऋन्धत्– -न्धन् ऋ १,१७३,११; ३, ३१, २; १०, ११०, २; मा २९, २६; का ३१,४,२; मै ४, १३, ३; काठ १६, २०; शौ ५,१२,२.

१†ऋधक्[h] ऋ ९,६४,१०; कौ २,६; जै ३,१,८.

२ऋधक्[i] ऋ ३, २५,१; ४, १८, ४; ३४, ६; ६, ४०, ५; ४६, १०; ७, ५७,४; ६१,३; ८, १८,११; १०१,१; १०, ४९, ७; ७९, २; ९३,८;१०५,८; मा ८, २०[1]‡[j]; ३३, ८७†; का ९, ३, ६[1]‡[j]; ते १, ४, ४४, २[2]‡[j]; मै १, ३, ३८[1]‡[j]; काठ ४, १२[2]‡[j]; क ३,१०[4]‡[j].

ऋधङ्-मन्त्र[k]– -न्त्रः शौ ५,१,१.

√ऋन्ध् √ऋध् द्र.

? ऋपात्[l] पै ५,२०,६.

ऋबीस[m]– -सम् ऋ ५, ७८,४; १०, ३९,९; -सात् ऋ १, ११७, ३; खि १, १२, २; -से ऋ १, ११६, ८.

---

[a]) सपा शौ ६,४९,२ अर्दयन् इति पाभे ।

[b]) मा स्वडा इति ।

[c]) सपा. ऋद्ध्या <> वृद्ध्या (मारा १३, २,७,४ च) इति पाभे. ।

[d]) विप. (इन्द्राणी-) । समासविषये पृ १० g टि. द्र. ।

[e]) विप (सत्र-) । तृस. पूप. प्रकृतिस्वरम् ।

[f]) विप. (आशु- [ अश्व- ]) । बस. पूप. प्रकृतिस्वरम् । उप. भाप. √री [गतौ] + क्वि प्र. उसं. [ पाउ ४, १३९ (तु. वे. सा. ORN. Gr. प्रमृ.; वैतु. PW. GW. WAG [२, ४२ d] °री– इति प्राति. =व्यप. इति कृत्वा उप. =ऐ– इति यनि. रूपश्च १ इति च ?, L [ ३८२, ४३१] उप. =ऐ– इति कृत्वा यनि. रूपं च१ इति?])] ।

[g]) विप. (अग्नि-) । बस. । उप. < √वृ [वरणे] ।

[h]) अव्य. [=समृद्धि-मत् ] । पपा नावग्रहः । सा. क्रिवि. (तु. सा ; वैतु. PW. GW. प्रमृ. =पृथक् इति) ।

[i]) अव्य [=पृथक् ] । व्यु. ? । पपा. नावग्रहः । < √ऋध् (°भेदने [तु. √अर्ध् ]) । सा. क्रिवि. । यदा तु =समृद्धिमत् इत्यर्थो विवक्षितः (तु. पक्षान्तरे या [४, २५], सा. च ) तदाऽदः =१ ऋधक् (< √ऋध् [वृद्धौ]) इत्येव विशेष. ।

[j]) सपा. ऋधक् ( मारा ४, ४,४,१२[२] या ४,२५[२] च) <> ध्रुवम् इति पाभे. ।

[k]) विप. (वरुण-) । बस. ।

[l]) पाठे ? उवि. सति द्वीप– > –पात् (पं१) इति शोधः ? ।

[m]) नाप. । अर्थः व्यु. च ? (तु. या ६, ३५ दे ४,३ प्रमृ. ) ।

**ऋभु**[a]- -भवः ऋ १, २०,४; ५१, २; ११०,४-६; १११,१; ३,६०,३; ४, ३३, २; ४²; ६-८; ३४, १; ३६,६; ५,४६,४; ५१, १३; ७, ३५, १२ ; ५१, ३; ८, ३, [७ (१२,३२)]; ७५,५; १०, ३९, १२; ६६, १०; ८०, ७; खि ५, ५, ६²; मा २१, २६; का २३, ३, ४; तै २, ६,११,१†; मै ३, ११,१२; ४, ११, ६†; काठ ७, १७†; ३८,११; †की १,२५६; २, ६२१; जै १, २७, ४†; शौ ६,१०८,३; १९,११,१†; २०, ९१, १†; पै ५, १७, ३;१३,८, ११†; -०भवः ऋ १, ११०,१; ८; १११, ३; १६१,[४; १३]; ११; ३, ५४, १२; ६०, २, ४; ४,३३,५; १०; ११; ३४, २-४; ८; १० ; ११ ; ३५, १, ३-६; ९; ३६,१-४; ७-९;३७,६; १०, ६५, १०; काठ २३, ११†; शौ ९, १, १२; पै १६, ३१, ३; -भवम् खि १, २, ९; -भुः ऋ १, ११०, ७²;१११,५;१२१,२; १६१, ६; २, १, १०; ३, ५, ६; ३६,२; ४,३३,३; ३४,१; ५, ७, ७; ६, ३, ८; ७, ४८, २[b]; ९, २१, ६; ८७, ३; १०, २३, २; ९३,७; ८²; १०५,६; १४४,२²; खि ४,५,१०[c]; काठ २३,११†; की २,२९१†; जै ३, ३, ८†; शौ ४,१२,७; ६,.४८,२[d]; १०, १, ८; पै १६,३५,८; -†भुभिः ऋ ३, ५४,१७; ६०,५;७; ४, ३५, ७; ७, ४८, २; ८,९,१२; काठ २३, ११, शौ २०, १४१, २; -भुभ्यः ऋ ४, ३३,१; मा ३०, १५; का ३४, ३, २; -भुम् ऋ ४,३७,[५; ८, ९३,३४]; की १, १९३†; जै १,२१,६†; शौ १, २, ३; -भू ऋ १०, १०६, ७; -भूणाम्[e] ऋ ४, ३५,२;५१,६; १०, १७६,१; मा १४, २६; का १५,८,५; तै ४,३,९,२; ५, ३, ४,५; मै २,८,५;४,१४,१५‡[f]; काठ १७,४, २१,१; क २६, ३; ३१,१६; शौ ९,१,१३; पै १६, ३३,३; -भून् ऋ १,१११,४.

¶आर्भव- -वः काठ १५, १०²; -वस्य मै १,९,५; ३,३, २; ४,२,४; काठ २२,१०; ३४, ४; क ३५, ४; -वे मै १, ११, ९; काठ १४, १० ; -वेण काठ ९,१४.

ऋभु-तुस(:) ऋ ४, ३६,५.

ऋभु-मत्[h]- -मत् ऋ १, १११,२; -मतः खि ५, ७, ४, ११; १७; -मताम् तै ७,५,७, २¶; -मते[i] मा ३८, ८; का ३८, २, २; -मन्तम् ऋ ३, ५२,६; -मन्ता ऋ ८, ३५, १५; -मान् ऋ १, ११०,९; ३,६०,६.

ऋभुं-ष्ठि(<स्थि)र[j]- -०र ऋ ८, ७७,८.

ऋ(भु>)भू-मत्- -मतः मै ४, ९, ९[k]; -मते मै ४, ९,८[i].

†ऋभुक्षन्, क्षा[l]- -क्षणः ऋ १०, ९२, ११; -०क्षणः ऋ ७, ४८, १; -०क्षणः ऋ ४, ३७, ३; [५ (८, ९३, ३४)]; ७;८; ७, ३७, १; २; ८, ७, ९; १२; २०, २; १०, ९३, ७; -क्षणम् ऋ १, ४, १,८६) त्रिस्वरश्च ।

[a]) विप. (इन्द्र-, अग्नि- प्रभृ.), व्यप. (सुधन्वनः पुत्र- [ऋ १,११०,८ प्रभृ.]) । व्यु. ? । पपा. नावग्रहः । ऋ- (<उरु- वा ऋत- वा)+भु- (<✓भा वा ✓भू वा) इति मा[११,१५] प्रभृ., <✓रभ् इति PW. प्रभृ. ।

[b]) पाठः ? इति कृत्वा °ऋभु-(विप.)> -भ्वः (प्र३ [तु. सस्थ. टि भ्वः]) इत्यस्य मूलतः सतः लैवि. स्यादिति तत्परः शोधः ? । [c]) सपा. खिसा २९,१० विभुः इति पाभे. ।

[d]) =सपा. मारा १२, ३,४,५। तै ३, २,१,१ तु सखा इति, ता १, ५,१५ गोत्रा १,५,१४ स्वरः इति, शाश्री ६,८,१२ माश्री २,५,१,२२ सखा इति च पाभे. ।

[e]) BL. !GRV. ऋपूणाम् (=ज्वालानाम्) इति पाठं प्रस्तावुकौ ।

[f]) सपा. ऋभूणाम् <> ऋपूणाम् इति पाभे. ।

[g]) विप. (पवमान-)। मात्वर्थीये अर्थे क्यच् प्र. ( पा ४, १,८६) त्रिस्वरश्च ।

[h]) विप. (देव-, युष्मद्-, वयस्- [=अन्न-])। मतुबन्तः।

[i]) सपा. ऋभुमते ( माश १४, २,२,९ तैआ ४,९, २; ५, ७,११ च ) <> ऋभूमते इति पाभे. ।

[j]) विप. (इन्द्र-)। कस. उपमाने पूप. प्रकृतिस्वरम् (पा ६, २, २)।

[k]) सपा. ऐआ १, २२ तैआ ४, १०, ५; ५, ८, १२ आश्री ४,७,४ शांश्री ५,१०,२१ सभुमतः इति पाभे. ।

[l]) विप. (इन्द्र-, मरुत्- प्रभृ. [ वैतु. नाप. इति PW. प्रभृ.])। अर्थः व्यु. ?। ऋभुक्षिन्- इति प्राति. इति पा ७, १, ८५; ८६ [तु. MW.], न तु तदधुना श्रुतिगोचरमिव भवति ? । पपा. नावग्रहः । ऋभु- + क्षिन्- [<✓क्षि ऐश्वर्ये वा निवासगत्योर्वा] इतीव कृत्वा उस. इति सा. ~ [ऋ १,६३,३], ✓ऋ + भुक्षिन् प्र. इति दे [३,३]? ।

१११,४; ८,४५,२९; ९३,[३४ (४,३७,५)]; १०, ७४, [५ (१०४, ७)]; कौ १, ११९; जै १,२१,६; –भ्वाः ऋ १,६३, ३; १६२, [१; ५, ४१, २]; १६७, १०; १८६,१०; २, ३१, ६; ४, ३३,९; ५,४२,५, ६, ५०,१२; ७,३७,४; ४८,३; ८, ९६, २१; १०, २२,२; ६४, १०; ९३, ८; मा २५, २४; का २७, १२, १; तै ४, ६, ८,१; मै ३, १६, १; काठ ४६,४; –०भ्वाः ऋ ४,३४, ५;३७,१.

ऋभु-तस्(ः) प्रभृ. ऋभु- द्र.

ऋभ्व[a]– -भ्वम्[b] ऋ ६, ४९, ९; १०, १२०,६; पै ६,१,६].

ऋभ्वन्[c]– -भ्वा ऋ १,१००,५, [१२, १०,६९,७],१२१,९; ६,३४,२, १०, २०,५;९९,५; –‡भ्वाणम्[b] शौ ५,२,७;२०,१०७,१०.

†ऋभ्वस्[d]– -भ्वसः ऋ ९, ८६, ५; कौ २,२३८; जै ३, २१,३; –भ्वसम् ऋ १,५६,१;५,५२,८;८,७०,३; कौ १,२४३;२,५०५; जै १,२६, १;३,३९,४; शौ २०, ९२,१८.

ऋश[e]– -शः शौ ४,४,७[f], ६,१०१,२.

आर्श[g]– -र्शम् शौ ४,४,५[h].

?ऋशदं[i] पै १७,२८,१.

ऋश्य[e]– -श्य॰ ऋ ८,४,१०; मा २४, ३७; का २६, ८, २; तै ५, ५, ११,१; १६,१; मै ३, १४, १८; ४, २, १२, काठ ४७, १; ६; –श्यस्य पै ४, ५, ६; –श्यान्[j] मा २४,२७, का २६,६,२.

आर्श्य– -र्श्यम् पै ४,५,५[h].

ऋश्य-दु[k]– -दात् ऋ १०, ३९,८.

√ऋष् (=√अर्द् [वधा.]) ऋष्यः खि ४,५, ३[l]; ऋष्यात् पै ९,४, ४; ऋष्यताम् पै २,३५,४.

ऋषति शौ ९, ४,१७[m]; ऋषत् पै १६,२५,७[m]; ऋषतु पै १९, २,१५.

आर्षम् मै ४, १,२[n].

ऋषत्– -षतः क १, ११[o].

?ऋष्य– -०ष्य जै २, ४,४![p].

?ऋषदूर्येयन्द्र.[q] पै १८,८,५.

ऋषभ[r]– -भः खि ५,५, ५, मा १४, ९;१८,२७; १९,९१; २१,१२[s]; ५६;२४,७; का ४,१०,१[t];१५, ३, ३, १९, ८, ४; २१,६, १२; २३, २,११[s]; ६, ९; २६, २,२; तै ¶१, २, ८, १‡[u]; ८, १, २[s]; ९,१; १७,१;१९,१; ¶२, १, ३, ७; ४, ५, ३, ७, ४; ४, १, ५,

---

[a]) विप. (इन्द्र-)। व्यु ?। √*ऋभ् [अर्थः ?]+ वन् प्र. [तु. ऋभ्वन्– प्रभृ यत्र प्र. एव भेदः] निस्वरस्य (वैतु GW. प्रमृ. <√रभ् इति)।

[b]) सपा. ऋभ्वम् (खि ११,२१ च) <> ऋभ्वाणम् इति पाभे.।

[c]) विप (इन्द्र-)। वनिप् प्र. इति ऋभ्व– इत्यतो विशेष।

[d]) विप (रथ-, इन्द्र-)। असुन् प्र इति ऋभ्व– इत्यतो विशेष॰।

[e]) नाप (मृग-विशेष-) व्यु ?।

[f]) श्य इति गा.।

[g]) तदिन अण् प्र तस्वरश्च।

[h]) सपा. आर्शम् <> आर्श्यम् इति पाभे (तु. प्रकृते PW. प्रभृ नश्यदा, वैतु. गा. र्षम् इति पाभे.)।

[i]) पाठः? आ√ऋष्(=)>आ···ऋष्छन् इति वा ष्छन् इति वा शोध ?।

[j]) सपा. ऋश्यान् <> ऋष्यान् इति पाभे.।

[k]) नाप (कूप-[निघ. ३,२३]?)। उस. प्रकृतिस्वर। पूप. प्रकृते भाति. एकाऽर्थं वा सम्पश्चिमिति?, उप. च < √दो (तु. दे.) वा √दा (बन्धने) वा (तु PW. प्रमृ. ?)।

[l]) सपा. खिसा २९,२ ऋच्छः इति ? शौ १०, १,७ पै १६, ३५,७ इच्छ॰ इति च पाभे।

[m]) सपा. ऋषति <> ऋषत् <> नुदते इति पाभे.।

[n]) सपा. ऋषम् <> रिपत् <> रिपम् (तैश्रा ३, ७,४,१० आपश्रौ १,३,१४,५,५ माश्रौ १, १,१,३७ च) इति पाभे। [o]) पृ ८५८ h टि. अयमपि पाभे. समावेश्य॰।

[p]) विप. ([स्तुत्य-] इन्द्र-)। =मै१। यद्वा -ष्यः इति शोधः इति कृत्वा प्र१ इति। '(हे) स्तुत्य इन्द्र (अथवा, [हे] इन्द्र स्तुत्यः [सन्]) त्वं भुङ् भगः इति, (हे) म॰ (हे) इन्द्र (त्वं) भुङ् (भगः) इति' इति पादद्वयेऽपि वा. द्र. (तु. सस्थ. टि. √भस् [भुवि]>भसः [परि.], ?इन्द्रभस्मरपृतः इति च)।

[q]) पाठः? ऋषभस्य रेतः इति शौ १४,२,१४ पाभे. अनु तत्परः शोध.?।

[r]) नाप. (वृषभ-)। व्यु ?। पया. नावग्रहः। < √ऋष् इति (पाउ ३,१२३)।

[s]) सपा. ऋषभः (तैब्रा २,६, १८,४ च) <> वृषभः इति पाभे.। [t]) सपा. ऋषभः <> वृषभः इति पाभे.।

[u]) सपा. ऋषभः <> वृषभः (मारा ३,१, ४,२ च)

१; ७,१०, १;५, ६, १४, १;७, २,१¶; मै १, ९, १२; २,६‡[a]; २,५,२¶; ६,१;५¶; ६¶;१२[२]; ८, २; ११, ६; ३, ७, ८‡[a]; ११,९; ११[b]¶; १३,८;¶४, २, १४[११]; ३,१;४,८; ८,१; काठ १, ११;२,६‡[a]; ¶१३,४;७[२]; १५, १;४[२]¶;९[२]¶;१७,२; १८,१२; ३०,१¶;३४,१¶; ३८,३; ४९, ४; क २६,१; २९,१;४६, ४¶; शौ ३,६,४,४,२८,५;५,२०,२; ९,४,१;३;७;१०,१०,१०; १९, २७,१;३६,५; पै १,५५,१;३, ३,५;५, १, ६; ६,९, ४;७,८, ५;८,९, ६;२०, ४; ९, २१, ८; २४, २; १०, ७, १; १३, ५,९; १६,२४, १; ३; ९२, ५, १०७, १०; १७, १२, ६; १९, ३२,९; —भम् ऋ १०,१६६,१; खि १, २,८; मा २१,३८‡[c],४०,५९; २८, ३४[d]; का २३, ४, १०‡[c]; १२,६,१२, ३०, ३, ११[d]; ¶तै १,८, १८, १;२५, २, २,१,४, ६[२]; ५,७, २,१; १०,१; मै १, १०,१६[२]¶;¶२,५,३[१];५; ६§, ८[२]; ३, ११, २; ¶काठ १२, १२;१३,२; ३[२];४[e];५[२]; ३४,१; ३६,९; शौ ९,२,१; ४,९; १४, १५;१८; १९; पै ५, ३१, ६;६, ९,९;१३, ३,६†; १६, २४, ९; २५, ४; ५; ८; ७६, १; २०,९, ८‡[e]; —भस्य ऋ ६, २८, ८; मा २१,४१[f], ४५[g]; ४६; ४७[h]; का २३,५,१[f];३[g],४;५[h]; तै ५, २,९,४¶; मै ४,२, १०¶; काठ २०, ८¶; ३०, ६[i]; क ३१, १०¶; शौ ४,४, ८;६,३८, ३[j]; ७,११८, २[k]; ९, ४,११; २३†; १४,२,१४; पै १,७१, ४;४,५, ६; ५,१५,५; ६,९-१०,१; १०, ६, १३; १२, ९, १०‡[l]; १६, २५,१; २६, ४†, १७, ३४,२[m]; —भाः खि २, १०, ३; ४, मा २४,१३; का २६, ३, ३; मै ३, १३,१८; शौ ३. २३,४[n]; पै ३, १४, ४[n]; ६, १०, ४; —भाणाम् शौ ४,४,४; पै ४,५,७; —¶भान् मै २, ५, १०[१]; काठ १३, ७, —भाय मा २४, ३०; का २६, ६,५, तै ५,५. ११, १; काठ ४७, १ ; —भासः ऋ ६, १६, ४७; १०, ९१, १४; मा २०, ७८†; का २२, ७, १२†; मै. ३, ११,४†; काठ ३८,९†; शौ ४, २४,४; पै ४, ३९, ४; —भे मै १. २, २; ३,६, १०; —भेण मा २१, ३२; ६०; का २३, ४, ४; ६,१३; तै ४, ४, ८, १[o]; ६,१, १०, २¶ ; ७,३, १४, १[o]; मै ३, ७, ७[२]¶; ११,२; ४,८,१¶; ¶काठ २४, २[२]; ३०, १; ¶क ३७,३[२]; ४६,४; पै ६,९,८;२०, १६, २[k]; —भेन पै ६, ९, ७; —¶भेषु मै १,१०,९; काठ ३६, ४; —भैः मा २१,४२; का २३, ५, २; मै ३, ११, ४; —भौ तै ५, ६, २१, १ ; काठ १३,४; ५०,१.

ऋषभ-चर्म— -र्मे काठ ३७,३.

ऋषभ-दायिन्— -यिने शौ ९,४,२०; पै १६,२५,१०.

[१]ऋषयस्य[p] पै १९,४०,१०.

ऋषि[q]— -षयः ऋ १,४८,[१४; ८,८, ६],१६२,७; १६४, १५;४,४२, ८; ५०,१; ७,२२,९; ८,६,१२;

---

<> ऋ ८,४२,१ काठ ११,१२ ऐब्रा १,३० शाब्रा ९,६ गोब्रा २,४,१५ आश्रौ ३,७,१५; ४,१०,५, ६,१,२ असुरः इति पाभे.।

a) पाभे. कृते पृ १०१८ u टि. द्र ।

b) पाभे. कृते पृ १०१८ t टि. द्र.।

c) सपा. ऋषभम्<>वृषभम्(तैब्रा २,६,७,२ च)इति पाभे.। d) सपा. तैब्रा २,६,१७,७ वृषभम् इति पाभे.।

e) सपा. ऋषभम्<>दर्शतम् इति पाभे.।

f) सपा. ऋषभस्य<>मेषस्य इति पाभे.।

g) सपा. ऋषभस्य<>छागस्य<>मेषस्य इति पाभे.। h) सपा. ऋषभस्य<>मेषस्य इति पाभे.।

i) सपा. ऋषभस्य<>वृषभस्य (मारा १६,५,९,१० च) इति पाभे.।

j) सपा. ऋषभस्य<>वृषभस्य (तैआ २,७,७,२ च) <>विध ६५,७ [१]वृषभराजा इति पाभे.।

k) सपा. °भस्य<>°भेण इति पाभे.।

l) सपा. ऋषभस्य<>वृषभस्य इति पाभे.।

m) सपा. ऋषभस्य<>वृषभस्य इति पाभे.।

n) =सपा. आपमं १,१३,२ हिगृ १,२५,१ । शांगृ १,१९,१० तु पुरुषाः इति पाभे.।

o) सपा. ऋषभेण<>वृषभेण इति पाभे.।

p) पाठे? ऋष्यस्य इति वा ऋश्यस्य इति वा शोधः द्र.।

q) नाप.। व्यु. ?। <√ऋष् (अर्थः ?) इति या (२, ११ [तु. पाउ ४, १२०]), <√रिष् इति मारा ६,१,१,१, <√रस् (शब्दे) इति Gray (सिभा १, १०४), <√दृश् इति औपमन्यव- [या. द.] भा. [तै १,४,४३,२]।

–याणाम् शौ १६,८,१३; –यान् शौ ११, १, २६; ३५; पै १६, ९१, ६; ९२,५; १७, २८, ४; –¶याय मै ४,८,३[2]; काठ २८, ४; क ४४,४; –येभ्यः शौ १२, ४,२;१२; पै १६, ७०,२; १७, १६-१७, २; २२, ४; –येषु शौ ११,१,३३; पै १६,९२,३.

†ऋषि-कृत्[a]– -कृत् ऋ १,३१,१६; ९, ९६, १८; कौ २, ५२६; जै ३,४१,२; पै १,५१,४.

¶ऋषि-कृत– -तम् तै ७,५,५,२.

†ऋषि-चोदन[b]– -नः ऋ ८, ५१, ३, खि ३, ३,३.

ऋषि-द्विष्– -द्विषे ऋ १,३९,१०.

ऋषि-प्रभू(त>)ता– -ता° पै १६, ९०,५.

ऋषि-प्रशि(ष्ट>)ष्टा[c]– -ष्टा° शौ ११,१,१५.

ऋषि-बन्धु[d]– -न्धवे ऋ ८,१००,६.

†ऋषि-मनस्[e]– -नाः ऋ ९,९६, १८; कौ २,५२६; जै ३,४१,२.

ऋषि-वत् ऋ १०, ६६,१४.

†ऋषि-षाण(<सान)[f]– -०णः[g] ऋ ९,८६,४; कौ २, २३६[1].

ऋषि-षाह्[h]– -षाट् ऋ ९, ७६, ४.

ऋषि-ष्टु(<स्तु)त,ता[k]– -तः तै २,५, ९,१; –ता ऋ ७,७५,५; –ताभिः ऋ ८, १३, २५; –ताम् शौ ६, १०८,२; पै १९,१७,८.

ऋषि-स्वर[l]– -रम् ऋ ५,४४,८.

ऋँषि-हित[m]– -ता खि १,१०,२.

ऋ(षि>)षी-वत्– -०वः ऋ ८, २,२८.

†ऋषु[n]– -षूणाम् ऋ १, १२७, १०[2]; ५,२५,१; ८, ७१,१५; १०, ६, १°, जै ४,१४,९.

ऋषेण पै ४, २४, ६.

ऋष्टि[p]– -ष्टयः ऋ १, ६४, ४; ५, ५४,११; ५७,६; ७, ५६,२; ८, २०, ११, २८,५; †मै ४, ११, ४; १४,१८; पै ५,२२,६; –ष्टिः ऋ १, १६७, ३; १६९, ३; –†ष्टिभिः ऋ १, ३७, २; ६४, ८; ८५,४; २, ३६,२; १०,८७, ७, २३[q]; शौ ८,३,७; २०,६७, ४; पै १६, ६,७; –ष्टिषु ऋ १, १६६, ४; –ष्टीः ऋ ५, ५२, ६; शौ ४, ३७,८;९.

†ऋष्टि-मत्[r]– -मद्भिः ऋ १, ८८, १; –मन्त ऋ ३, ५४,१३; ५, ५७,२; ६०, ३; तै ३, १, ११, ६; मै ४, १२,५.

ऋष्टि-विद्युत्[s]– -द्युतः ऋ ५, ५२, १३; –०द्युतः ऋ १,१६८,५.

ऋष्टि-(सेन>)षेण[t]–

†आर्ष्टिषेण[u]– -णः ऋ १०,९८, ५;८; मै ४, ११, २; काठ २, १५, –णेन ऋ १०, ९८, ६.

?ऋष्ण्यु– -ष्ण्यवः[v] शौ १९, ३५, ५; पै ११,४,५.

१ऋष्य– √ऋष् द्र.

२ऋष्य[w]– -ष्यस्य पै ७, १, १०[x],

---

[a]) विप (अग्नि-, सोम-)। उस. क्विबन्तम्।

[b]) विप (इन्द्र-)। उस ल्यु-अन्तम् उप. प्रकृतिस्वरम्।

[c]) सपा °प्रभृता<>°प्रशिष्टा इति पाभे.।

[d]) विप. (पर्णी-)। तृस. पूप. प्रकृतिस्वरम्।

[e]) विप (दारभ-)। बस. पूप. प्रकृतिस्वरम्।

[f]) विप. (सोम-)। शिष्टं e टि. द्र.।

[g]) विप. (सोम-)। न्यु इत्ते पृ ४१२ h टि. द्र.।

[h]) सपा. जै ३,२१,१ ऊषिषाण इति पाभे.।

[i]) ऋर्षि° इति B.।

[j]) विप. (सोम-)। समासस्वरो ऋता-षाह्- टि. द्र.।

[k]) विप. (उपस्-, ऊति-, मेधा- प्रमृ.)। तृस.।

[l]) ऋषीणां स्तोतृणां स्तोत्राणां वा स्वरः इति कृत्वा षस. अन्तोदात्तः। अस्य यशुनस्य (=यशुनस्य [=सोमस्य]) केतुना (=ध्वजेन [देदुभूतेन]) याशु (=यशस्वन् [ऋ.]) ते मर्यन्त)' इति वा. द्र. (तु. सस्थ. टि. यशुन–, याशु–; वेतु. GRV.; मा. GW. Gri. विप. इति)।

[m]) °हि° इति स्वरे ? यनि. शोधः।

[n]) नाप. (देव-, ऋषि- प्रमृ.)। व्यु.?। √ऋष् (गतौ) इति सा., <√ऋष् (?) इति PW. प्रमृ.।

[o]) सपा. मै ४,१४,१५ ऋभूणाम् इति पाभे.।

[p]) नाप. (आयुध-विशेष-)। व्यु ? <√ऋष् (हिंसायां, दीप्तौ प्रमृ.) इति।

[q]) सपा. शौ ८,३,२३ आर्षिभि. इति पाभे.।

[r]) विप. (मरुत्-, रथ-)।

[s]) विप. (मरुत्-)। बस. पूप. प्रकृतिस्वरम्।

[t]) व्यप. (देवापि-पितृ-)।

[u]) अपत्येऽर्थे अण् प्र. (पा ४,१,११२) तत्स्वरश्च।

[v]) पाठः ? पै. शंपा. सा. [नाप.= हिंसक-पुरुष- इति] च यनि., मूको. (शौ.) ऋष्णु–>-ष्णवः इति, RW. W. कृत्वन्–(=कृत्या-कृत्-[=कृत्या- इति B.])>-त्वनः इति च। व्यु. ?।

[w]) ऋश्य– इत्यनेन स-न्यायता द्र.।

[x]) पाठः ? रिश्यस्य इति मूको. प्रायिकम् (तु. सपा. शौ ५,१४,३ यनि)।

–त्यान् खि ५, ५, ११; मै ३, १४, ९[a]; –त्यासः पै ९, ६, ७‡[b].

?ऋप्वे स्य य च मा प्वें चा कत्यम् पै ८,१२,२.

ऋप्व,प्वा[c]– -०|प्व ऋ ३, ३५, ८; ४,२,२; ५,३३,३; १०,१२, ६; शौ १८,१,३४; –|प्वः ऋ १, ८१,४;१४६, २; २,२१, ४; ३, ५,५; ७; १०; ४, २०, ६; ९; २३,१;६,१७,७;२९,६; ७,९७, ७;८,४६,११;५०,[(४९,७)७]; १३,९[d];१०,१४८,२; मै ४,१४, ४; काठ १७, १८; २१,१३; कौ १,४२३;३,३,१३; जै १,४१,५; २,३,८; शौ ७,१२, १§; २०, ४७,३;१३७, १४; –|प्वम् ऋ ३, ३२,[७, ६,१९,२;४९,१०], ४,१९,१; ६,२०,९; २६,४; ७, ७७,६,८६,१,९९,२,९,८९,४, १०,३६,७; काठ ४,१६; जै ४, १९, १०, –प्वया ऋ ६, १८, १०, –प्वस्य ऋ १, २५, ९; –प्वा ऋ ६,४७,८[e]; १०,७३, ३; –प्वा॰ ऋ ५, ५२, ६; १३; ६, २४, ८, खि ५, ७, १, ६; मा २९, ५; का ३१, १, ५, तै ५, १, ११, २; मै ३, १६, २; ४, १३,२; काठ १५,१३; ४६, २; –प्वात् ऋ ४, २२, ४; ७, ६१,३; –प्वान् ऋ ६, ६३, ९; –प्वासः ऋ १,६४,२; –०प्वे ऋ ६, ६४,४;७,६२,४, –|प्वेभिः ऋ १,२८,८;८, ३, [१७ (४९, ७) ५०,७]; १०, १०५,६; खि ३,१-२,७; कौ १, ३०१; जै १, ३१,९; –प्वैः ऋ १०, ७३, ६; –प्वौ ऋ १,२८,८.

ऋप्व-वीर[f]– -रस्य ऋ १, ५२, १३.

ऋप्वौ(प्व-ओ)जस्[g]– -जाः ऋ १०, १०५,६.

√*ऋह्, ऋहत्– √*ऋद् द्र.

# ए

१ए[h] मै ४,९,२१.

२ए (आ √इ), आ(आ-अ)यति ऋ ८,५५,१, तै १, ३, १४, ४[i]; आ(आ-अ)यति शौ ४, ३, ५; ६,६०,२; ७५,२; ३[j], १९, ४९, ९, आयति पै १४, ४, ९; १०; १९, १४, ५; २०, ३६, ६; आ(आ-अ)यसि शौ ६, १३१, ३, पै १, ७२,२; ५, ३०, ५?[k]; १३, १, १६, १९, १५, ९[l]; आयामहे पै ३, ४०, २; आ(आ-अ)यत तै ४, २, ५, ६‡[l]; मै २, ७, १२‡[l]; काठ १६, १२‡[l]; पै १६, ७३, ४; आयः पै २०, ५४, २; आ···अयः[m] शौ १९,५०,६; पै १४, ४,१६; आ(आ-अ)य शौ १९, ८, ३; आयत पै १९,५१,१५[l].

ए(आ-ए)ति ¶ तै १,४,४३,२; ५, १, ५, ९[n]; ६, १, ११, ५[n]; ६, १, १; २; ३[n]; शौ १३, २, २५; पै १८,२३,२; ए(आ-ए)ति शौ ९,१,२; ऐति पै १६,३२,३; आ···एति ऋ ६, ३, ३; आ··· एति ऋ १, ११३,१६; एतः शौ ६, २९, २; पै १६, ५२, २§; १९, २७, ११; २०, २८, ७; आयन्ति खि ५, १५,७; मै १, १०,१९¶; शौ ६,६६,१;१०३, ३, १२, ४, ११; आयन्ति[o] ऋ २,१३,२; ¶तै ५, २,४,४; ६, ९, ३, ५, ७, ५,७,४; ¶मै १, १०,१३; १९[p]; २०; ३, २, ४; काठ ३०, १० ¶; शौ १२, १, २६; २०, १३०, १५[p]; आयन्ति ¶काठ २३,८; ३३,७[p];८; ३६,

a) पाभे. ¶ १०१८ *j* टि. द्र.।
b) सपा. ऋप्वासः<>शरास. इति पाभे.।
c) विप. (द्वार्-, अग्नि-, इन्द्र- प्रमृ.)। व्यु. ? < √ऋप् (?) इति। d) पाभे. पृ ८९८ *a* टि. द्र.।
e) पाभे. पृ ८६९ *c* टि. द्र.।
f) विप. (बृहत्- [स्वर्ग-लोक-])। बस. पूप. प्रकृतिस्वरम्।
g) विप. (इन्द्र-)। बस.।
h) संबोधनार्थो निपातः (तु. सपा. तैआ ४,४०,१ [तत्रैव भा. सा. च])। व्यु.?।
i) सपा. तैआ २,५,१ आयाति इति, कामा १२८:१ आयातु इति च पाभे.।
j) सपा. आयति <> आयसि इति पाभे.।
k) पाठे? आयति इति वा यथेमां इति वा शोधः स्यात् (तु. सपा. शौ ३, २४, ५)।
l) पाभे. पृ ६८४ *c* टि. द्र.।
m) संपा. अद्या इत्यत्र °द्य-आ इति च्छेदः (तु. मूको. पपा., W.; वैतु. शंपा. पपा. अद्य इत्येव, सा. च अयस्- >-यः [पृ ३९२ यनि. सु-शोध्यः] इति भाषमाणः चिन्त्यः [क्रिप. एव वा. स्वारस्यात्])।
n) तु सस्थ. टि. अभि।
o) तु. वें. प्रमृ.; वैतु. GW. परि···आ° इति।
p) सपा. खि ५,१५,९ आयन् तुम् इति द्विपदः पाभे.।

१३[a]; ¶क ३१,१,४६,८; पै १७,
१७,१,४[a];५[a]; ३८,५; १९, ११,
१०; १८, १०, ११; ५३, ११[b];
आ···यन्ति ऋ १, १२३, १२;
९, ९६,२४; खि २, ९,२; मै ३,
३,८¶; शौ ८, ९, ६[b]; आ···
युन्ति शौ २,२,३; आ···यन्ति पै
१,७,३; ओ(आ+उ)···यन्ति ऋ
१,११३,११; तै १,४,३३,१†;
आ··· एधि° ऋ १,५२,१२; ए(आ-
इ)थः ऋ १०,१०६,२; एथ पै १,
५०,१; ए(आ-ए)मि मा ३,४१[d];
का ३, ४,५[d], तै १,४,४३,२[d];
६, ६,१,२[e]; काठ ८,१०¶, क
७,६¶; शौ ७,६२,१[e]; पै ३,२६,
१[e]; आ···एमि पै ७,३,१०‡[f],
ए(आ-इ)मसि ऋ १, १६१, ३;
मा ३, ४१; का ३, ४, ४; शौ
१०,४,६; पै १६, १५,६; २०,
२४,७; ए(आ-ए)तु ऋ ८, ३१,
[११ (९,१०१,७)]‡, खि ६, १,
१; शौ १, १५, २; ३, १५,१,
४, १५,६; १८, ३; ५, ५, १०,
१३[i], ६,१८, १[k]-४[k], ५३,२[ab];
७, ६९, १[j], ९,४, ७, १०,४,
२२; १२,३,१७; १८, ३, ६२[j];
१९, ३९, १; ५२, ४[k]; पै १,
२४, ४; ७१,३[l]; २,१८, १[k];
८५,२[a]; ५, ७, ३; ३१, ९; ७,
१०,१; ८,१५,९; ९, १४, ३[k];
१०, ६,२; १३, ९, १२[a]; १६,
२४,८; आ···एतु ऋ १, १८६,
१; २, ३३, १; ५, १२, ६; ६,
१९,९; ७, ४, ८; ८, २४, २९;
४६, २१; १०, ५७, ४; ११०,
८; खि २, १०,१[m], २[n]; ४,९,
१; †मा ३,५४; २९, ३३; ३३,
३४, †का ३, ७,४; ३१, ४, ९;
३२, ३,५; तै १, ८,५,३†; २,
४,५,१; ३, ३, ३-४, ३; मै १,
१०, ३, ४, ११, ४; १३, ३†;
काठ †९, ६, १९; १६,२०†;
४०,३; क ८,९†; शौ ३, २३,
२; ५; ५,१२,९†; ६, ७९, २;
पै १, ३९, २; ३, १४, २; ५,
७,१५,१०; १९,१६,१८; २४,
११†; आ(एतु) ऋ ६, १९,९[a];
मा ३३,४७†, का ३२, ४, ४†;
ते २,४,५, १; ३, ३, ३, ३, मै
४, ११, ४[a]†; काठ ९, १९[a]†;
शौ ६, ७९, २; पै १, ३९, २;-
७१, ३[c]; १९, १६, १८;
एनाम् पै १०, २, २!; आ···
इनाम् शौ ७, ५५, ३; आयन्तु
ऋ १०, ६४, ९; मा १९, ५८;
का २१,४,९; तै १, ५, १०, ३;-
मै १, २, ३; शौ १, ७, ५[k]; ५,
८,१; ८, ७, ७, १०; ९, २, ७;
१२, ३,२०; पै ५, ३७, ६; ६,-
१७,१०; ७,१८,१; ९, ९, ६[a];
१०, २,८; ४, ६; १६, १२, ७;
१०; १४,२; ७६, ६; १७, ३७,-
१०; १९, ६, ५‡[o]; ४१, ७[p];
२०, ४८,९; आ···यन्तु ऋ १,-
८९,१; ५, ५८, ३; ७, ३७, ८;
खि ४, १, १; मा २५, १४†;
का २७, ११,१†; मै ४, ४, १;-
७,१; ४, ११,२†; काठ ४,१४;-
२६,११†; ३१, १५; ३४, १९;
शौ २, २६,१; ३५, ५; ५, ११,-
९; १९, ५८,५; पै २, १२, १;
५, २०, ८; १६, १८, ६[b];
आ(यन्तु) ऋ ७, ३७, ८;
ए(आ-इ) हि ऋ १, ९,१; १०,४;
७६, ९; १०४, ९; ३, ३५, ६;

[a]) सपा. शौ १२, ४, १४, १५ अच्छा( च्छ-आ )यन्ति इति पाभे. ।

[b]) सपा. आ · यन्ति <> आ ·यन्तु इति पाभे. ।

[c]) तु स्क. वें. GW.; वैतु. सा. स्वाम. आ इति ।

[d]) =सपा. आपश्रौ ६,२७,३; १६,१६,४ शांगृ ३,७,२ । लाश्रौ ३,३,१ हिगृ १,२९,१ तु एमि इति, आपश्रौ ६,२७,५ आगाम् इति, काश्रौ २,५,१७ आपश्रौ १६,१६,४ आपमं १,८,२ शांगृ ३,५,२ मागृ १,१४,६ हिगृ १,२९,२ प्रपद्ये इति च पाभे. ।

[e]) तु. सस्थ. टि. अभि ।

[f]) सपा. आ···एमि <> आ···एतु इति पाभे. ।

[g]) पाभे. इते पृ १२४ b टि. द्र. ।

[h]) पाभे. इते पृ १२४ a टि. द्र. ।

[i]) =सपा. माश्र १४, ९, ४,५ तैआ ६, १२,१ मंत्रा १, ६, ११ बृ ६,४,५ शाश्रौ ८, १०,१ वैताश्रौ १८,४ आगृ ३, ६,८ कौसू ९,२; ४५,१७; ५४, २; ५७, ८; ६६, २ गोगृ ३, ३, ३४ हिगृ १, १७, ४ मागृ १,३,१ । तैआ १,३०,१ तु प्रैतु इति पाभे. ।

[j]) सपा. तैब्रा ३, ७, १४,४ तैआआ १०, ४५ आपश्रौ २१,३,१२ हिगृ १,२८,१ आगन् इति, मंब्रा १, १, १५- शाश्रौ ४,१६,५ पागृ १,५,११ आगाद् इति च पाभे. ।

[k]) तु. सस्थ. टि. उप ।

[l]) पाठे? √इ > एतु इति शोधः ।

[m]) सपा. खिसा ९,१ आ···ऐतु? इति पाभे. ।

[n]) सपा. खिसा ९, २ आ···ऐतु इति पाभे. ।

[o]) सपा. आयन्तु <> यान्त्वन्तु इति पाभे. ।

[p]) सपा. शौ ३, १,६ एतु इति पाभे. ।

